॥ श्री ॥
अथ श्री त्रिविक्रमपंडिताचार्यसुत श्री नारायणपंडिताचार्यविरचितः
॥ श्री मध्वविजयः ॥
८. अष्टमः सर्गः
प्रतिभाप्रभाप्रमुखसद्गुणैर्निजैः अतिविस्मयं नियमिनां मनो नयन् ।
पुरुधीः कदाचिदथ वेदनायकं विजने शनैरुपससाद तं वने ॥ ८.१ ॥

सुविशेषशेषवदशेषवर्णितप्रतिबोद्धुरस्य ननु शिष्यतोचिता ।
गुरुमानसस्य गुरुताऽपि सत्पतेः इति सोपसत्तिरमरैरमान्यत ॥ ८.२ ॥

पुर ऐव पूरितमपूरयत् पुनः ननु कृष्ण ऐष परमार्थसंख्यया ।
भगवन्मनः पुरमिवाऽयतं पुरा निजधाम तां च जगृहे तदद्भुतम् ॥ ८.३ ॥

इतिहाससुंदरपुराणसूत्रसत्प्रियपंचरात्रनिजभावसंयुतम् ।
अशृणोदनंतहृदनंततोऽचिरात् परमार्थमप्यगणितागमावलेः ॥ ८.४ ॥

ऋजुपुंगवस्य परिजानतः स्वयं सकलं तदप्यलमनंतजन्मसु ।
स्वकृतोर्वनुग्रहबलादमुष्य तां विशिशेष शेषशयनः पुनर्धियम् ॥ ८.५ ॥

अथ बादरायणसहायसंपदा प्रययौ प्रणंतुममितांतरो युतः ।
अपि नादिरायणपदोदितं हरेः वपुरंतरं लसितमाश्रमांतरे ॥ ८.६ ॥

तमपश्यदाश्रमवरे प्रभूतधीः ज्वलनं ज्वलंतमिव धूमवर्जितम् ।
वरवल्कलाकलितमौंजिमेखलं विलसज्जटावलयमादिपूरुषम् ॥ ८.७ ॥

अतिदुर्जयेंद्रियजयादिरूपिणा तपसा वसंतमिव संततं वने ।
निजरूपभूतनिरपेक्षनिर्मलप्रचुरात्मसौख्यरतमप्यनारतम् ॥ ८.८ ॥

नयनद्वयेन नलिनप्रभामुषा परिफुल्लताविलसितेन विस्मयात् ।
तमवेक्ष्य धर्मजमधर्मदुर्लभंमनसेति भूरितरमानसोऽस्मरत् ॥ ८.९ ॥

जगतां चतुर्दशतयं चतुर्मुख प्रमुखैर्युतं प्रळयमानिनाय यः ।
सममुल्लसन् कमलयैव केवलं परमः स ऐष हि पुराणपूरुषः ॥ ८.१० ॥

त्रिगुणाकृतिप्रकृतितो गुरुं ततः त्रिविधामहंकृतिममर्त्यखान्यतः ।
अपि भूतपंचकमितोऽंडमंडलं भगवानसाविह जगंति चासृजत् ॥ ८.११ ॥

विधिवायुवींद्रशिवकौशिकेशकान् अमरामरानुगनरासुरादिकान् ।
सृजति प्रपालयति हंति संततं स्वगतिं प्रयापयति चैष लीलया ॥ ८.१२ ॥

अगणय्यसद्गुणगणो विदूषणः स्ववशाखिलोऽप्यनुपचारतः स्वयम् ।
स्मृतिकीर्तनप्रणतिभिर्विमुक्तये स्वजनस्य यात्ययमनेकरूपताम् ॥ ८.१३ ॥

चतुराननाय चतुरः पुराऽऽगमान् प्रददावसावनिमिषेश्वरः प्रभुः ।
विनिहत्य हि श्रुतिमुषं पुरातनं वपुषोद्धतं हयमुखेन सद्रिपुम् ॥ ८.१४ ॥

अमरेंद्रवैरिभुजदंडमंडलप्रतिकर्षपुष्करपतद्धरोद्धृतिः ।
विदधे वराहवपुषाऽमुनोर्मिमत्सृतिसिंधुकच्छपतयाऽऽप्तरक्षिणा ॥ ८.१५ ॥

नरसिंह एष विददार दारुणं प्रतिघोदयेनखरचक्रतेजसा ।
स्वरिपुं क्षणेन सरसः स्फुरत्तनुं पृथुसत्वमिष्टजनभीतिभंजनः ॥ ८.१६ ॥

अपि वामनो ललितबाल्यवानयं प्रतिभाबलेन कृतदैत्यकौतुकः ।
उपधेरधः कृतबलींद्रशात्रवः स्वजनाय केवलमदात् परं पदम् ॥ ८.१७ ॥

कथयंत्यमुं परशुभासमानगोहतमर्त्यदेवतमसं मुहुर्मुहुः ।
जगतां हितं हरिमिवापरं हरिं गुरुशक्तितापसवरान्वयोद्भवम् ॥ ८.१८ ॥

करुणाकरः सवसुदेवमोददो भगवान् पुराऽहिमकरान्वयेऽभवत् ।
जितवान् दिशो दशरथोऽग्र्यसंपदो जनको बभूव भुवि यस्य वैरिहा ॥ ८.१९ ॥

भुजगेश्वरोऽपि भुवनेश्वरप्रियः समजन्यथारिदरजन्म भुव्यभूत् ।

तममुष्य कांतिविजितेंदुमग्रजं रमणीयमाहुरिह रामनामकम् ॥ ८.२० ॥

जनकेन सोऽथ विरहासहिष्णुना मुहुरीक्षितो वनमनीयत प्रभुः ।
चकितेन दुष्टजनतस्तपस्विना तत आसुरीं निशिचरीं जघान सः ॥ ८.२१ ॥

मुनिसप्ततंतुकृतवैरबंधनं कटुकेश्यरिष्टपदमुख्यदुर्जनम् ।
क्षपयंतमुद्यतसुबाहुमाहवे तमथाभ्यनंददमरादिसद्गणः ॥ ८.२२ ॥

सवने विकस्वरगुणस्वरद्विजे स्फुरिते चरन् सकलगोकुलप्रियः ।
इतकामतापसरसार्द्रधीगिरः प्रतिलाळयन्नरमतैष सुंदरीः ॥ ८.२३ ॥

सहजान्वितः सकलमित्रसंयुतो मधुरां पुरीं जनकवल्लभां गतः ।
प्रविशन्निमां स जगदेकसुंदरो नरनार्युदारनयनोत्सवोऽभवत् ॥ ८.२४ ॥

अथ खंडितेश्वरधनुः स लीलया क्षपितोग्रसेननृपपुत्रपौरुषः ।
समुपास्य विप्रगुरुमब्जभूगुरुः स्वजनानमोदयदमेयतेजसा ॥ ८.२५ ॥

कमलामयं कमलपत्रलोचनां भुवमागतां नृपसुतां गृहीतवान् ।
निजलीलया विजितराजशात्रवो मुदमापदाप्य पुरमब्धिदुर्गमम् ॥ ८.२६ ॥

स जगाम मातृजनतुष्टये किल त्वरितोऽवनं विदधदीप्सितं सताम् ।
सह भार्ययाऽपि शुभया महाजयध्वजलक्ष्मणाग्र्यसुहृदा विना[ऽ]मुदा ॥ ८.२७ ॥

समतीतपर्वतपुरोगदुर्गमः खरदूषणादिसुजनद्विषो बहून् ।
स निहत्य विश्वभयदं सुदुस्सहं नरकं महातम उतानयत् क्रमात् ॥ ८.२८ ॥

रुचिराश्रमाजिरचिताग्र्यतेजसा प्रियया प्रियो भुवनमान्यया समम् ।
भृशमाकुली कृतमदप्रमादवत्सुरपारिजातहृदवाप धाम सः ॥ ८.२९ ॥

हरितामधीशनरदेवमंडलं दशकं विजित्य परभीषणं मुहुः ।
स्फुरितामिह प्रियतमां निजश्रियं भगवानुपैक्षत हरंतमप्रियम् ॥ ८.३० ॥

अभिनंदितः पवननंदनादिभिः स कदाचिदिंद्रसुतवर्धको गवा ।
निजराज्यमात्मदयिताय दत्तवान् हरिसूनवे हतविपक्षमुत्तमम् ॥ ८.३१ ॥

मुदमाप्य तत्र दयितोरुवार्त्तया मधुहा मरुत्सुतमुखप्रवृत्तया ।
हरितिग्मचक्रलसितोऽब्धिमध्यगं प्रययौ स पुण्यजनसेवितं पुरम् ॥ ८.३२ ॥

पृथुकुंभकर्णगजराजमुद्धतं ससहोऽदरं सविबुधेंद्रशात्रवम् ।
धरणीभरं पृथुलचक्रमक्षिणोत् निशितेषुचक्रकृतविक्रमः प्रभुः ॥ ८.३३ ॥

अथ भार्यया हुतवहं प्रविष्टया सहितः सहोदरपुरस्सरैरपि ।
अयमाप्य धाम चिरमिश्टदः सतां निजमूलरूपपरमैक्यमेयिवान् ॥ ८.३४ ॥

महिदासपूज्यचरणो द्विजादभूद् विदितात् स विष्णुयशसोऽमलात्मनः ।
इह यो दधे जगति पापशांतये बहुधामहेतिमतिदीप्तगोस्थितिम् ॥ ८.३५ ॥

सुतपोरुचेरयमपापकर्दमात् ननु मानवी तनयतामुपेयिवान् ।
समयेन भूरिनिजभक्तिपूरितान् समजीजनत् सुमनसः स देवराट् ॥ ८.३६ ॥

सुबृहत्पयोधरमिथः प्रसंहतिप्रकटीभवत्परमयौवनाकृतिः ।
असुराहितां वरविलासिनी तनुः प्रददावमुष्य सुरराशये सुधाम् ॥ ८.३७ ॥

सुजनाय दत्तपद आत्मशुद्धिदः सुकुमाररूप्यभवदेष शाश्वतः ।
अनसूयया शुचिमनीषया धृतः परमादरेण मुनिपुंगवोढया ॥ ८.३८ ॥

दयितः सतामृषभ ऐष भूधरो वपुरुद्वहन् परमहंस लक्षणम् ।
व्यहरद्वलक्षतमपक्षशोभनं परतत्वलिप्सुसनकादिवंदितः ॥ ८.३९ ॥

उदपादि धर्मतनयो ह्ययं हरिः नरदेवसोदर उदारविक्रमः ।
अपि कृष्ण इत्यभिहितो मुदे सतां स्वयमेव यस्य सहजो व्यजायत ॥ ८.४० ॥

परमात्मने सततमेकरूपिणे दशरूपिणे शतसहस्ररूपिणे ।
अविकारिणे स्फुटमनंतरूपिणे सुखचित्समस्ततनवे नमोनमः ॥ ८.४१ ॥

इति चिंतयन्नविरळांतरो हरिं प्रणनाम सप्रणयमादृतोऽमुना ।
अजितौ परस्परसभाजितौ स तौ निकषा निषीदति पुरोपवेशिनौ ॥ ८.४२ ॥

विविधा विधाय किल तत्र संकथाः वदनं मुनींद्रतनयस्य सुंदरम् ।
अवलोक्य लोकपतिरानतं महासुखतीर्थमाह रहसि स्म गामिमाम् ॥ ८.४३ ॥

शृणु देवकार्यमवधार्य धैर्यवद् युदुदीर्यमाणमिदमार्यसम्मतम् ।
भविताऽन्यदुष्करतरं विधाय तत्तरुणं तवावतरणं महाफलम् ॥ ८.४४ ॥

अपिधाय सूत्रहृदयं सतां प्रियं प्रविधाय भाष्यमधुना निजेच्छया ।
अपरैः श्रुतिस्मृतिनिजार्थदूषकैः सुतरां तिरोभवति संविदाहता ॥ ८.४५ ॥

अपनेतुमेनमनयं कृतं खलैः प्रतिनेतुमात्मजनतां शुभां गतिम् ।
कुरु सूत्रभाष्यमविलंबितं व्रजेः सुमतेन योजय कवे श्रुतिस्मृतीः ॥ ८.४६ ॥

अमितां मितामपि गिरं जगद्गुरोः इति तां निशम्य विरळेतरांतरः ।
वदतां वरस्तमवदत् तदा तयोः विरहाक्षमः खलु चराचरेशयोः ॥ ८.४७ ॥

भवतोरितः सततसेवनामृते मम मंक्तुमस्तु भगवन्ननुग्रहः ।
न लभेय वल्लभतमेदृशं सुखं जगतां त्रयेऽपि जगदेकमंगलम् ॥ ८.४८ ॥

कलिकालकालितगुणे धरातळे सुजनो न नूनमधुनाऽस्ति योग्यधीः ।
परतत्त्ववर्णनमयोग्यतावते ननु हव्यदानमिव निंद्यते शुने ॥ ८.४९ ॥

इति तं ब्रुवाणमयमब्रवीद् विभुः भुवि संति सौम्य पुरुषा गुणोचिताः ।
विमलान् मणीनिव गुणोज्झितानिमान् दयया विशोधय विशुद्धगोगणैः ॥ ८.५० ॥

तव कीर्तिरार्तिमतिमात्रमानयेदशुभान् प्रभाकरविभेव कौशिकान् ।

कमलाकरानिव शुभान् प्रबोधयेत् परमाज्ञया मम विशेषतोऽनिशम् ॥ ८.५१ ॥

इति सा महीधरमुखाद् विनिःसृता जगतां सुखाय विशदा सरस्वती ।
द्विजराजगोविषयतातिपूरितं प्रविवेश मध्वपृथुबुद्धिवारिधिम् ॥ ८.५२ ॥

मतमित्यवेत्य महितं महतोः अभिधाय बाढमिति धीरमतिः ।
अनयोर्नियोगमधिरोपितवान् स्वशिरस्यनन्यसुवहं प्रणमन् ॥ ८.५३ ॥

आम्नायास्त्रय इव तत्त्वबोधकास्ते पापघ्नास्त्रय इव पावकाः प्रजानाम् ।
लोका वा सकलभृतस्त्रयोऽत्र रेजुः सानंदा मुनिसुतधर्मसूनुमध्वाः ॥ ८.५४ ॥

॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत
नारायणपंडिताचार्यविरचिते श्रीमध्वविजये
आनंदांकिते अष्टमः सर्गः ॥